श्री

# आपिशलीयशिक्षा

आकाशवायुप्रभवः शरीरात्
समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो
वर्णत्वमागच्छति यः स शब्दः ॥ १ ॥

तमक्षरं ब्रह्म परं पवित्रं
गुहाशयं सम्यगुशन्ति विप्राः ।
स श्रेयसा चाभ्युदयेन चैव
सम्यक् प्रयुक्तः पुरुषं युनक्ति[1] ॥ २ ॥

स्थानमिदं करणमिदं
प्रयतनमेत[2](द्) द्विधानिलस्थानम् ।
पीडयति वृत्तिकारः
प्रक्रम एषोऽथ नाभितलात्[3] ॥ ३ ॥

---

१. 'व्यन' ख. २. 'न एष द्वि' ख. ३. 'तटात' ख.

---

Note: This rare text on ancient Indian Phonetics is edited here based on two Manuscripts preserved in our collection. Ms. No. 624F is given as क while the Ms. No. 16408–Z is denoted as ख. The text contains many doubtful readings which cannot be corrected for want of additional readings. This is supposed to date back to Āpiśali himself, Ed.

तत्र स्थान[१]करणप्रयत्नेभ्यो वर्णास्त्रिषष्टिः । तत्र वर्णानां केषां किं स्थानं किं करणं प्रयत्नश्च कः केषामित्युच्यते । तत्र स्थानं तावत्—अकुहविसर्जनीयाः कण्ठ्याः । हविसर्जनीयावुरस्यावेकेषाम् । जिह्वामूलीयो [२]जिह्वामूलीयः । कवर्ग[३]वर्णानुस्वारजिह्वामूलीया जिह्व्या एकेषाम् । सर्वमुखस्थानमवर्ण[४]कुलमित्येके । इचुयशास्तालव्याः । ऋटुरषा मू[५]र्धन्याः । ऋ दन्तमूल्यमेकेषाम् । लृतुलसा [६]दन्त्याः । लृ दन्तमूलस्थानमेकेषाम् । वकारो दन्त्योष्ठ्यः । सृक्कस्थान एके । उपूपध्मानीया ओष्ठ्याः । अनुस्वारयमा नासिक्याः । कण्ठ्यनासिक्यमनुस्वारमेके । यमाश्च नासिक्य[७]जिह्वामूलीया एकेषाम् । एदैतौ कण्ठ्यतालव्यौ । ओदौतौ कण्ठ्योष्ठ्यौ । ञमङणनाः स्वस्थाना नासिकास्थाना[८]श्च । द्विवर्णानि सन्ध्यक्षराणि । सरेफ ऋवर्णः । एवमेतानि स्थानानि ।

करणमपि—जिह्व्[९]यतालव्यमूर्धन्यदन्त्यानां जि(ह्वया ?ह्वा) करणम् । कथमिति—जिह्वामू[१०]लेन जिह्व्यानाम् । जिह्वामध्येन तालव्यानाम् । जिह्वाग्रेण मूर्धन्यानाम् । जिह्वा[११]ग्राधः करणं वा । जिह्वाग्र[१२]ेण दन्त्यानाम् । शेषाः [१३]स्वस्थानकरणाः । इत्येतत् [१४]करणम् ।

---

१. 'नं करणेभ्यो वर्णा' क.  २. 'जिह्व्यः । कव' ख.

३. 'स्वारा जिह्व्याः । जिह्वामूलीयो जिह्व्य एकेषाम्' । क.  ४. 'र्णमेके' क.

५. 'मूलस्थान एकेषाम्' क.  ६. 'न्त्याः । वका' क.

७. 'या जिह्वा एके' ख.  ८. 'ना स्थानानि' । क.

९. 'ह्वाता' ख.  १०. 'मूलो जि' क.  ११. 'ह्वाग्रेधिकारणं वा' ख.

१२. 'ह्वाग्र्येण' क,  १३. 'नाः । इ' क.  १४. 'कार' ख.

प्रयत्नो[१] द्विविधः। आभ्यन्तरो बाह्यश्च। तत्राभ्यन्तरस्तावत्–स्पृष्टकरणाः स्पर्शाः। ईषत्स्पृष्टकरणा अन्तःस्थाः। विवृतकरणा ऊष्माणः[२]। विवृतकरणाः स्वराश्च। ए ओ विवृततरौ। ताभ्यां ऐ औ। ताभ्यामप्यकारः। संवृतोऽकारः। इत्येषोऽन्तःप्रयत्नः।

अथ बाह्याः–वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीया जिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठा श्वासानुप्रदाना अघोषाः। वर्गयमानां प्रथमा[३] अल्पप्राणाः। इतरे[४] महाप्राणाः। वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ[५] नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तः[६]। वर्ग[७]यमानां तृतीया अन्तःस्थाश्चाल्पप्राणाः। इतरे सर्वे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः। आनु[८]नासिक्यव(र्ज्यम् ? र्जम्।) शादय ऊष्माणः स्वस्थानेन द्वितीया हकारेण चतुर्थाः। एष[९] बाह्यप्रयत्नः।

[१०]तत्र स्पर्शयमवर्ण[११]करो वायुरयःपिण्डवत् स्थानमभिपीडयति। अन्तः(स्था? स्थ)वर्णकरो वायुर्दा[१२]रुपिण्डवत्। एवं[१३] व्याख्याने वृत्तिकाराः पठन्ति। अष्टादश-प्रभेदमवर्ण[१४]कुलमिति। कथम्–

१. 'त्नोऽपि द्वि' ख. २. 'णः स्वराश्च तेभ्य ए' ख.
३. 'मे' ख. ४. 'रे सर्वे म' ख. ५. 'र्थौ सं' ख.
६. 'न्तश्च'। ख. ७. 'र्गाणां तृ' ख. ८. 'अनु' ख.
९. 'एते बाह्यप्रयत्नाः। ख. १०. 'तत स्प' क. ११. 'कारो' ख.
१२. 'युर्दारुपि' ख. १३. 'वं तत्रजाख्याते मृत्युकारः पठति' क.
१४. 'ति तत्करमिति। ह्रस्व' क.

ह्रस्वदीर्घप्लुतत्वाच्च त्रैस्वर्योपनयेन च ।

अनुनासिकभेदाच्च[१] (संज्ञायो? संज्ञया)ष्टादशात्मकम् ॥ इति ।

एवमिवर्णादयोऽपि[२] । ऌवर्णस्य दीर्घा न सन्ति । तद् द्वादशप्रभेदेना[३]चक्षते । यदृच्छया श(क्त? क्ति)जानुकरणेन वा स्युर्दीर्घाः । तदा[४] तमष्टादशप्रभेदं ब्रुवते । सन्ध्यक्षराणां ह्रस्वा न सन्ति । तान्यपि द्वादशप्रभेदानि । छन्दोगानां[५] सात्यमुग्रिराणाय(म?)नीया ह्रस्वानि पठन्ति । तेषामष्टा[६]दशप्रभेदानि । अन्तःस्था द्विप्रभेदा रेफवर्जिताः[७] सानुनासिका निरनुनासिकाश्च[८] इति । रेफोष्मणां सवर्णा[९] न सन्ति । वर्ग्यो[१०] वर्ग्येण सवर्णः । एष क्रमो वर्णानाम् । तत्रैषां स्थानकरण-[११]प्रसिद्धिरुच्यते[१२]–इह यत्रस्था वर्णा उपलभ्यन्ते तत् स्थानम् । येन निर्वर्त्यन्ते तत् करणम् । प्र(य)तनं प्रयत्नः । तत्र नाभिप्रदेशात् प्रयत्नप्रेरितो वायुरूर्ध्व-माक्रमन् उर आदीनां स्थानानामन्यतमं स्थानं प्रयत्नेन विधार्यते[१३] । स विधार्यमाणो वायुः स्थानमभिहन्ति । तस्मात् स्थानाभिघाताद्[१४] ध्वनिरुत्पद्यते आकाशे । सा वर्णश्रुतिः । स वर्ण[१५]स्यात्मलाभः । तत्र[१६] वर्णध्वनावुत्प[१७]द्यमाने य (था? दा)

---

१. 'च्च तेऽष्टादश...ति' क.  २. 'यः । ऌ' ख.

३. 'भेदमाच' ख.  ४. 'दाप्यष्टा' क.  ५. 'गाः सात्यमुग्रराणायनी' ख.

६. 'तेऽष्टा' ख.  ७. 'ताः यव(ह्ला? ला) स्सानु' ख.  ८. 'श्चा रे' क.

९. 'र्णानि न' ख.  १०. 'ग्र्यो' ख.  ११. 'णप्रत्ययप्र' ख.

१२. 'बहु य' क.  १३. त...ध्रियमाण।' क.

१४. 'तादाकाशे ध्वनिरुत्पद्य(ते) । सा' ख.  १५. 'सर्वस्यात्म' क.

१६. 'त्र ध्व' क.  १७. 'त्पा' ख.

गलबिलस्थान[1]पर्यन्ताः परस्परं स्पृशन्ति सा स्पृष्टता[2]। ईषत्स्पृष्टता दूरेण यदा स्पृशन्ति सा। विवृतता सामीप्येन यदा स्पृशन्ति सा । संवृतता (एकोऽन्तः? इत्येषोऽन्तः)-प्रयत्नः[3]।

स इदानीं प्राणो[4] वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठे[5]ऽभिहन्ति[6], तस्मिन् कोष्ठेऽभिहन्यमाने गलबिलस्य संवृतत्वात् संवारो विवृतत्वाद् विवारः। तौ संवारविवारौ[7]। तत्र यदा कण्ठबिलं संवृतं भवति तदा नादो जायते। विवृते[8] कण्ठबिले श्वासो जायते। तौ श्वासानुप्रदान-मित्याचक्षते। अन्ये तु ब्रुवते अनुप्रदानमनुस्वने[9] घण्टानिर्ह्रादवत्[10]। तत्र यदा स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद् घोषो जायते। यदा श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गाद् अघोषो जायते सा घोषवदघोषता। महति वायौ महाप्राणः। अल्पे वायावल्पप्राणः। सा अल्पप्राणमहाप्राणता। महाप्राणत्वादूष्मत्वाद् यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा[11] गात्रस्य निग्रहः। कण्ठबिलस्य[12] चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्[13] रौक्ष्यं भ(व)ति। तमुदात्त-माचक्षते। यदा तु मन्दः प्रयत्नो भवति तदा[14] गात्राणां स्रंसनं कण्ठबिलस्य[15]

१. 'नकरणप्रयत्नाः पर' क.  २. 'ता इत्येषोऽन्तःप्रयत्नः'। ख.
३. 'त्नः। इदा' क.  ४. 'णो नाम वा' ख.  ५. 'ष्ठमभि' ख.
६. 'न्ति तदा गल' क.  ७. 'वहति' क.  ८. 'ते तु कण्ठ' ख.
९. 'स्वानोच्चन्तानिह्रा' ख.  १०. 'वत्। अ॥' ख.  ११. 'दा शास्त्रनिग्र' क.
१२. 'स्याणुत्व'' ख.  १३. 'त्वादौष्म्यं भ' ख.  १४. 'गात्रस्य स्र'' क.
१५. 'स्य म' ख.

च महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति तममुदात्तमाचक्षते ।

उदात्तानुदात्तस्वरसन्निपाते[१] स्वरित इत्येष[२] प्रयत्नोऽभिनिर्वृत्तः कृत्स्नः प्रयत्नो भवति ।

अष्टौ स्थानानि वर्णाना-

मुरः कण्ठः शिरस्तथा ।

जिह्वामूलं च दन्ताश्च

नासिकोष्ठौ च तालु च ॥

स्पृष्टत्वमीषत्स्पृष्टत्वं

संवृतत्वं तथैव च ।

विवृतत्वं च वर्णाना-

मन्तःकरणमुच्यते ।

[३]कालो विवारसंवारौ

श्वासनादावघोषता ।

घोषोऽल्पप्राणता चैव

महाप्राण[४] इति त्रयः ॥ (?)

[५]आपिशलीयशिक्षा समाप्ता

—०—

१. 'न्निवःसात् स्व' क. २. 'इत्येवं' ख.
३. 'कलौ' ख. ४. 'माप्रणस्वरास्त्रयः' ख.
५. 'इत्यापिशलशि' ख.